Tel: "Samskrutam" दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !



# गैर्वाणी

## मासिकी पत्रिका

संपुटः १४ 15th APRIL 1976 क्रमांकः ४

नळ चैत्राङ्कः शकाब्दाः १८९८ मूल्यम् ०-५० पैसाः

# विषयसूचिका

★

# दशावतारस्तोत्रम्

स्फूर्तिश्री, गुण्टूरु

बलोन्मत्तचित्तं बलिं बुद्धिशक्त्या,
विजित्य प्रमेयं स्वरूपं दधानम् ।
लसत् कुब्जरूपं भवन्तं प्रपद्ये,
प्रसीद प्रसीद प्रभो वेंकटेश !

क्षतात् त्राणधर्मे प्रमत्तान् नृपालान्,
कुठारप्रहारैः परिष्कारयन्तम् ।
मुनिं जामदग्न्यं भवन्तं प्रपद्ये,
प्रसीद प्रसीद प्रभो वेंकटेश !

सतीचौर्यपापात् कलंकेश्वरः सन्,
हतो येन सांगं स लङ्केश्वरोऽपि ।
अयोध्याधिपं तं भवन्तं प्रपद्ये,
प्रसीद प्रसीद प्रभो वेंकटेश !

# नेपालप्रधानमन्त्रिणः आगमनम्

यद्यपि नेपालस्य, भारतस्य च सुहृद्भावः चिरादारभ्य वर्धत एव, अथाऽपि तं भावं द्रढीकर्तुं द्विगुणीकर्तु मेव नेपालप्रधान-मन्त्री डाक्टर् श्रीमान् तुलसीगिरिः सहामात्यैः प्रधानोद्योगिभिश्च सार्धं भारतमागतवान्। अनयोर्भारतनेपालदेशयो रुभयोर्मध्ये विभेदपरिकल्पनाय कैश्चिद्देशैरितःपूर्वं कृतः कुहनाप्रचारः इतःपरं सर्वात्मना न सफलोभविष्यतीति संप्रति नेपालप्रधानिनो भारतपर्यटनं सूचयतीति अभ्यूहितुं महत्साधनमिवाभाति। अनयोर्भारतनेपालप्रधानिनोर्हार्देण संभाषणेन द्वयोर्विषययोः, वाणिज्य-राजकीयव्यावहारिक-सांस्कृतिकसम्बन्धः इतोधिकतया दिनदिनाभिवृद्धि मेष्यतीति विश्वसिमः।

परन्तु बंगलदेशस्य वैखरी परं विचारणीयास्ते। यो देशः स्वस्य संकटस्थितौ सर्वात्मना आधारीभूय, सकलविधं साहाय्यमकरोत्, तद्देशविषय एवात्मनः अन्यथा प्रवर्तनमतीवाश्चर्यकरमेव भवति समेषाम्। मुजिपुर्रहमानस्य कालानन्तरे, तत्रोत्पन्नेषु विवादेषु केचन भारतस्याऽननुकूला अपि, आन्तरङ्गिकव्यवहारा इति कृत्वा तेषु न प्राविशद्भारतदेशः। सहकारितां प्रदर्श्य सुहृद्भावेन व्यवहाराणां परिष्काराय कृता विविधाः प्रयत्नाः तद्देशीयानामधिकारिणामानुकूल्याभावाद्विफला एव भवन्ति। भारतदेशस्तैषां प्रीत्युत्पादनार्थं गाङ्गजलमपि स्वल्पमेव स्वीकर्तुमुत्सहते। येन केनाप्युपायेन सामरस्यतया क्लिष्टानंशान् परिष्कर्तुमुद्युक्तो भारतदेश इत्यहोऽस्य सहनभावः।

अन्यतः तपाकीस्थाननायका महता संरम्भेण अधुनातनान्यायुधानि संगृह्णन्ति । फ्रान्सदेशसहायसंपत्या अण्वायुधानामप्युत्पत्तये प्रयतन्ते । तेषामेतादृशः पन्थाः भारतस्यावश्यं वैक्लब्यं जनयत्येव । सिम्लासङ्गरमपि गरमिव मन्वते ते ।

एवंरूपान् सन्निवेशान् सम्यगवगम्य,भारतदेशस्योपरि, दुराक्रमणचिन्ता केषाञ्चनाऽद्यापि विद्यत एवेति देशीयैरप्रमत्तीभूय प्रादेशसमग्रतापरिरक्षणपटुभिर्भाव्यमिति प्रोवाच प्रधानसचिवा स्वीये काश्मीरपर्यटनसमये । भारतमधिकृत्याद्यापि पाकिस्थानस्याऽन्यथाप्रचारस्त्वविच्छिन्नतया प्रचरत्येव ।

चीनदेशसमुत्पन्नविवादानप्यनुक्षणं अन्वीक्षमाणैरस्माभिर्भाव्यम् ।

विदेशाङ्गमन्त्रिणः वै. वि. च्यवनस्य प्रयत्नपटुतया टर्की, इराक् इत्यादिदेशेषु भारतसंबन्धः अत्यन्तसन्निहितः, सुहृद्भावश्च सुदृढ आसीदिति निश्चेतु मविपश्चितोपि पारयन्ति । यादृशमपि प्रमादं धैर्येण निरोद्धुं भारतदेशस्सन्नद्ध एव वर्तत इति घण्टापथमस्माकं नायकैर्बहुधा गदितमक्षरशस्सार्थकतामुपैत्विति सर्वदा भगवन्तं प्रार्थयामः ।

नूतनहायनो नळनामा भारतीयानां, भारतस्य, कृत्स्नस्य जगतश्च शुभप्रदो भूयादित्याशास्यते ।

"लोका स्समस्ता स्सुखिनो भवन्तु"

# पाणिनेः व्याकरणशास्त्रे स्थानम्

ति. गो. अनन्तसुब्रह्मण्म्, तिरुपति,
शिरोमणिः, विद्वान्, सङ्गीतभूषणम्, डि.इन्.डीच्.

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे"ति। तत्र शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा। कल्पश्चेति षडङ्गानि। इति दृश्यते। तेष्वंगेषु प्रधानं व्याकरणमेव। उक्तञ्च — भगवता पतञ्जलिना महाभाष्ये — "प्रधानं च षडंगेषु व्याकरणमिति। प्रधाने च कृतो यत्नः फलवान् भवतीति। अतोव्याकरणविषये अवश्यमेव यत्नो विधेय इत्यनायासेन सिध्यति। तत्र व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणमिति व्युत्पत्त्या शब्दानां व्युत्पादनं शब्दविषयकजननमेव व्याकरणस्योद्देश्यमिति प्रोस्फुटयते। तथा च श्रुतिः — "नामरूपे व्याकरवाणी"ति।

व्याकरणशास्त्रस्य नामान्तरं "शब्दानुशासनमि"ति। शब्दानुशासनमित्यस्य शब्दविषयकज्ञानसाधनार्थकत्वेन शब्दज्ञानस्य व्याकरणज्ञानफलकत्वेन शब्दरूपलक्ष्यघटितस्य व्याकरणत्वसंभवात् अपि च "लघ्वर्थं अध्येयं व्याकरणमि"त्युपक्रम्य ब्राह्मणेन अवश्यं शब्दा ज्ञेया" इति नचान्तरेण व्याकरणं लघुना उपायेन शब्दा शक्याः विज्ञातुमि"त्युक्तञ्च भगवता पतञ्जलिना। तथा च व्याकरणज्ञानं विना शब्दा प्रयोक्तुमशक्याः।

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्।

इति विभिन्नानि व्याकरणानि दृश्यन्ते । "जयत्यष्टाविध-शाब्दिकाः" तत्र इन्द्रः प्रथमः शाब्दिक इति विषये महाभाष्यमेव प्रमाणम् । "एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम । बृहस्पतिश्च वक्ता इंद्रश्चाध्येता, इथ्यं वर्षसहस्रं अध्यापन-कालः, तथापि नान्तं जगाम" "किं पुनरद्यत्वे यः सर्वथा चिरं जीवति, सः वर्षशतं जीवती"ति ऐन्द्रव्याकरणविषये श्री "श्यूआन् चु आङ" महोदयेन कथ्यते व्याकरणसम्बन्धनियमा इन्द्रेण स्थिरीकृता इति ।

पाणिनेः पूर्वं ६५ ऋषयः शाब्दिका आसन्निति ज्ञायते । एतेषु सत्स्वपि सर्वेषु व्याकरणेषु सार्वलौकिकवैदिकानां नितरां व्युत्पादकं पाणिनीयव्याकरणमेव वरीवर्ति ।

छान्दोग्युपनिषदि व्याकरणं उपक्रम्य "वेदानां वेदः इत्युक्तम्। अत्र पराशरोपपुराणम् —

"पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं; त्याज्यं न किञ्चन" ।।

इति अन्यच्च — "काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्" इति सर्वव्याकरणेषु निकषायमाणस्य पाणिनीयव्याकरणस्याति-सारवत्वं वसुमत्यां विदुषां विदितमेव । पाणिनिकाले भाषेयं एवं व्यवस्थिता नासीत् । विविधाः विचित्राः प्रयोगाः अस्यां भाषायां प्रचलन्ति स्म । तत्र ये अत्यन्तं विरलाः ते पाणिनिना परित्यक्ताः । ये तु कथञ्चिदपि प्राप्तप्रचाराः ते विकल्पा-दिना संगृहीताः । अतः पाणिनिव्याकरणस्य प्राधान्यं वक्तुं

शक्यते । लौकिकवैदिकपदानि सम्यगालोऽक्य लोकवेदयोः सांगत्येन स्वव्याकरणमरचयत् । एतदेव अन्येभ्यो व्याकरणेभ्यो पाणिनीयव्याकरणस्य वैशिष्टच म् ।

पाणिनीयव्याकरणशास्त्रस्य पर्यवेक्षणेन अस्माभिः ज्ञातव्यविषयाः सन्ति । पाणिनिस्तु न केवलं व्याकरणशास्त्रप्रवर्तकः । किन्तु समस्तप्राचीनवाङ्मयरूपग्रन्थानां मार्गदर्शकोऽपि । वैदिकग्रन्थेभ्यः अतिरिक्तभूगोलेतिहासमुद्राशास्त्रेषु अन्यलोयव्यवहारेषु च प्रवीण इति ज्ञायते । अस्य पाणिनीयस्य शास्त्राध्ययनेन प्राचीनभूगोलज्ञानं, इतिहासज्ञानञ्च ज्ञातुं शक्यते ।। प्राचीनार्वाचीनकालयोः सेतुरिव एतस्य व्याकरणशास्त्रस्य अध्ययनं वर्तते इति वक्तुं पार्यते । पाणिनिं प्रति भाष्यकारः: वदति —

"प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङमुख-उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण इति । अनन्तरं सामर्थ्ययोगान्नहि किंचिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात्" ६–९–७७ जयादित्येनापि उच्यते "उदक् च विपाशः" इति सूत्रे "महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य" इति । एतेन पाणिनिशास्त्रस्य प्रामुख्यं व्यज्यते । किञ्च रामायणे उत्तरकाण्डे ३६–४७ श्लोके नवव्याकरणानां नामानि दृश्यन्ते । अत एव नवव्याकरणस्य अस्तित्वं सिध्यति । तेषु पाणिनिव्याकरणस्य प्रामुख्यं दृश्यते । केचन अष्टौ व्याकरणानि सन्तीति वदन्ति । तेष्वपि पाणिनीयव्याकरणस्य गणना दृश्यते ।

[ अनुवर्तते ]

गतमासगैर्वाण्यां प्रदत्तायाः समस्यायाः

## पूरणम्

शिवे शिवाश्लिष्टतनौ शयाने,
तदीयचूडाग्रविभासमानाम् ।
सुधारसास्वादनलोलचित्ता,
पिपीलिका चुम्बति चन्द्ररेखाम् ।।

— के. सि. जयचन्द्रशास्त्री, चित्तूरु

काञ्चीपुरीमध्यविलासिकाञ्चीं,
पुण्ड्रेक्षुहस्तां पुरुषार्थदात्रीम् ।
माधुर्यलोलाऽधिगता भवानीं,
पिपीलिका चुम्बति चन्द्ररेखाम् ।।

— वि. एम्. पद्मनाभशर्मा,
तञ्जावूरु

सुधामयीं स्वादुरसानुगेयं,
गिरीशमौलिप्रसृतां धरित्र्याम् ।
बिलोद्गता बन्धुगणैस्समेता,
पिपीलिका चुंबति चन्द्ररेखाम् ।।

— आर्. गोपालः, चित्तूरु

स्वरंगावल्ल्यां नवोढा पश्यति स्म,
मया, विभ्रमाच्छर्करया सुप्रभाते ।
हा, धिङ्मां रेखितां रङ्गवल्लीं
पिपीलिका चुंबति चन्द्ररेखाम् ॥

— या. वि. देवासकरः, बरोडा

कर्तुं न शक्यं हि यदस्ति कर्म,
तदेव शक्यं सुजनस्य संगात् ।
महेशमूर्ध्नि स्थितपुष्पसङ्गात्,
पिपीलिका चुम्बति चन्द्ररेखाम् ॥

— जयेशः, पुसद्

---

श्री यन्. लक्ष्मणरेड्डिः (इटिकनेल्लूरु)

साधारणः कर्षकः सं भ. प्र. सभायाः भवननिर्माण-सहायार्थं स्वच्छन्दतया रू. २५-०० (पञ्चविंशति-रूप्यकाणि प्रादात्। तस्मै अनेके धन्यवादाः समर्पयामः।

अपि चान्ये वदान्या एवमेव यथेष्टं सभाभवननिर्माण-कार्यक्रमाय साह्यमार्थिकमारचयन्तु इति सप्रश्रयं प्रार्थ्यंते ।

इति,
ब. शेषाचार्यः,
प्रधानमन्त्री

# धन्योऽसौ वेंकनार्योऽपि

— चलमचर्ल वेङ्कटरामानुजाचार्यः, जिल्लेल्लमूडी

आन्ध्रेषु विख्यातपुरीवरेषु,
पुरातनः – तिम्मसमुद्र (म्) उर्व्याम् ।
तत्रास्ति 'वेङ्कन्न' वदान्यरत्नं,
ग्रामस्य येनास्य विशिष्टकीर्तिः ॥ १

पद्मावतीनाथकृपाकटाक्षात्,
पूर्वार्जितात्पुण्यसमुच्चयाच्च,
लोकोपकाराय महातपस्वी,
'पुन्नम्म' गर्भादुदभून्मनस्वी ॥ २

सनातनाचारपथेन गच्छन्,
आयुर्विदा सूचितकर्मकुर्वन् ।
विद्युत्प्रभाभासितवस्तुतुल्यां,
स्वदेहयष्टिं कृतवान् गुणज्ञः । ३

गोत्रोद्भवानाञ्च स्ववंशजानां
क्षेमाभिवृद्धी हृदयेन कांक्षन् ।
अखण्डमैश्वर्य मनन्तलक्ष्मीं,
तत्याज चैतन्यवतां वरेण्यः ॥ ४

विचिन्त्य वित्तस्य विनश्वरत्वं,
विद्वत्समाराधनतत्परोभूत् ।

सर्वस्वदानेपि समुत्सुकोऽसौ,
सद्धर्मकर्माचरणे रतश्च ॥ ५

देशाभिमानेन प्रचोदितोऽसौ,
वाचोविधोयाखिलहेमराशिम् ।
गान्धीमहानायकहस्तयुग्मे
समार्पय त्साञ्जलि रानतात्मा ॥ ६

विद्यालया, धर्मपुराणशाला:,
श्रीकृष्णजन्मोत्सवभव्यलीला: ।
तटाककूपस्थितनिर्मलाम्भ:,
उद्‌गारयन्त्यस्य वरिष्ठदानम् ॥ ७

रम्भोर्वसीसङ्गमलोलुपैर्वा,
माहेन्द्रसिंहासनकांक्षिभिर्वा ।
लोके तपोदानमखा: क्रियन्ते,
किन्त्वस्य निष्काम मनिन्द्यकर्म ॥ ८

दिगन्तविश्रान्तमनोज्ञकीर्ति,
लेभे महात्मा भुवि प्राप्तदेह: ।
त्यक्त्वा शरीरं दिवि जागरूक:,
विष्णो: पदं शाश्वत माप्तवांश्च ॥ ९

अनन्तकल्याणगुणै रुपेतं,
गोरन्ट्ल वेङ्कन्नयशश्शरीरम् ।
परिभ्रम त्पश्यति सर्वधर्मान्,
आचन्द्रतारार्क मिलातलेस्मिन् ॥ १०

गोरन्ट्ल वंशाब्धि सुधामयूखं,
संगुप्तदानातिशयेन पूज्यम् ।
विद्याप्रचाराय च रिक्तहस्तं,
वेङ्कन्नदातार महं प्रपद्ये ॥ ११

धन्योहं कीर्तनीयस्य गुणकीर्तनकर्मणा ।
धन्योऽसौ वेङ्कनार्योऽपि देवभाषासपर्यया ॥ १२

जयतु जयतु गोरन्ट्लान्वयोद्भूतकीर्तिः !
जयतु जयतु गीर्वाणान्ध्रशाला, विशाला !
जयतु जयतु नित्यं, धर्मशालान्नपूर्णा !
जयतु जयतु धर्मो, देशकालातिगोस्य !

---

## रामाय तस्मै नमः

या. वि. देवास्करः, वटोदरम्

श्रीरामनवमीमहोत्सवप्रीत्यर्थम् —

"श्रीरामः शरणं समस्तजगतां" तद्वत्स तत् तस्थुषाम्,
रामेणैव हि तत्कृतं बहुश्रुतं, रामाय तस्मै नमः ।
रामान्नास्ति परश्च लाभहितकृद्भक्तस्य सर्वस्य हि
रामे स्याद्बहुभक्तिरच्युतरनिर्विद्वज्जनानां किल ॥

श्रीरामनवमी पूज्या, रामं भजत मानवाः ।
भवे पुण्यस्य प्राप्त्यर्थं, रामनाम जपेदिह ॥

# श्रीरामचन्द्रस्तुतिः

वन्दामहे महेशानचण्डकोदण्डखण्डनम्,<br>
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ।<br>
नमो रामपदाम्भोजरेणवो यत्र सन्ततम्,<br>
कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥

स्वर्णाजिनशयनो,<br>
योजितनयनो दशास्यदिग्भागे ।<br>
मुहुरवलोकितचापः,<br>
कोऽपि दुरापः स नीलिमा शरणम् ॥

कनकनिकषभासा सीतयाऽऽलिङ्गिताङ्गो,<br>
नवकुवलयदाम श्श्यामवर्णाभिरामः ।<br>
अभिनव इव विद्युन्मण्डितो मेघखण्डः,<br>
शमयतु मम तापं सर्वतो रामचन्द्रः ॥

परिणयविधौ भङ्क्त्वाऽनङ्गद्विषो धनुरग्रतो,<br>
जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् ।<br>
कुसुमधनुषा पाशेनेव वशीकृतोऽ –<br>
वनतवदनो रामः पाया त्त्रपाविनयान्वितः ॥

# स्वर्गवासो न रोचते

**ज. शेषाद्रि अय्यंगार्यः,**

न्यायाध्यापकः, S. V. प्राच्यकलाशाला, तिरुपति ।

---

"श्वशुरगृहनिवासः स्वर्गतुल्यो नराणाम्" इति सर्वजनसाधारण्येन आभाणकमस्ति । पुरा "जामाता विष्णुवत्पूज्यः" इतिन्यायेन श्वश्रूश्वशुरस्यालादिभिः जामातुः राजोपचारपूजा गृहेषु निर्वर्तिता अभूत् । अतः जामातुः श्वशुरगृहनिवासे स्वर्गवाससुखसब्रह्मचारी सुखविशेषः आसीदिति उपर्युक्तेन आभाणकेन ज्ञायते । श्रीमान् हरिः क्षीराब्धिराजसुतां लक्ष्मीमुवाह । अतः तया सह क्षीराब्धिमध्ये शेषभुजङ्गशयने शयानः श्वशुरगृहवाससुखमनुभवन्नास्त । किन्तु यदा शेषतल्पाधिकं आनन्दं वेङ्कटाद्रिशिखरे अपश्यत् तदा तदापि क्षीरसागरमध्यस्थं वैकुण्ठपुरं विहाय वेङ्कटाद्रिशिखरे स्वामिपुष्करिणीतटे आनन्दनिलयं सार्धं रमया विहर्तुमनाः नित्य मध्यास्ते इति ।

> "मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ।
> स्वामिपुष्करिणीतीरे रमया सह मोदते" ॥

इति पौराणिकी गाथा गायति । अतः अधुना स्वर्गस्य तिरुपतितिरुमले क्षेत्रं दृष्टान्तीकर्तव्यम् । आन्ध्रदेशस्य मकुटायमानं इदं क्षेत्रं द्राविडदेशस्य उत्तरसीमामुखतिलकायमानं च विराजते । अतः स्वर्गवासिनः इन्द्रादिदेवा अपि स्वदेशे शान्तिमलभमानाः

स्वर्गं परिहाय महान्तमानन्दमन्विष्यन्तः श्रीशैलशिखरमागच्छन्ति । यतोऽत्र अघटितघटनाचतुरः देवतिर्यङ्मनुजदानवानां अपूर्वं समागममारचयति । प्रायशः धनवतां दीनैः सह परिचयविरहात् तदुपरि दया नागच्छति । दीनानां धनिभिः सह परिचयाभावात् तेषामपि विद्यमानान् श्रमान् अनवगाहमानाः तेभ्यः असूयन्ति ।

यदि द्वयोरपि तयोः एकत्र परस्परसमागमः स्यात् तदा धनिनां दुर्गतेषु दया, दीनानां धनिषु अनसूया च उद्भवेत् । इत्थमेव देवानां स्वरूपं स्वभावं च अजानन्तः नराः न तान् अर्चयन्ति देवाश्च स्मयदूषिताः न मनुजेभ्यः अभिमतसाधनेनोपकुर्वन्ति ।

"देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ।।

इति गीतोपदेशरीत्या एतदालोच्य भगवान् वेङ्कटाद्रिनिवासः अस्य लोकस्य अमुष्य लोकस्य च मध्यस्थाने श्रीशैलशृङ्गरूपप्रासादानन्दनिलयविमाने कृतसान्निध्यः स्वसेवायै नरान् उपरि आरोपयति, ऊर्ध्वलोकस्थान् गीर्वाणान् अधः स्थानं अवतारयति च । तथा उभयोः सेव्यसेवकयोः सन्धि कारयन्मोदते । इत्थं च देवैरपि इष्यमाणत्वात् स्वर्गादपि वेङ्कटपुरी गरीयसी संवृत्ता । इत्थं च तत्रारूढानां मनुजानां स्वर्गसुखं कराग्रापचेयफलं स्यादित्यत्र न कोऽपि संशयः ।

इयं च कविवरवेङ्कटेशस्य पुराणकथोपजीविनी उत्प्रेक्षा । न तु मितंपचानां मादृशां मतिमारूढोऽयं ।

तथाहि —

"तत्रारूढैः महति मनुजैः स्वर्गिभिश्चाऽवतीर्णैः,
सत्त्वोन्मेषाद्व्यपगतमिथस्तारतम्यादिभेदैः ।
साधारण्यात्फलपरिणतेः सङ्घशो बद्धयमानाम्,
शक्त्या कामं मधुविजयिनः त्वं च कुर्याः सपर्याम्"॥

इति हंससन्देशाख्ये वेदान्तगुरुवरप्रणीते काव्ये वेङ्कटाद्रि-वैभवविषयोऽयं श्लोकः । माल्यवत्पर्वतं सानुजः अध्यासीनः सीताविरहशोकसंतप्तहृदयः श्रीरघुवरः "कामार्ता हि प्रकृति-कृपणाश्चेतनाऽचेतनेषु" इति तत्रागतं हंसं कञ्चन सन्देशहरण-योग्यं मन्यमानः तस्मै सीतासकाशं गत्वा कथितव्यां सन्देशवार्तां लंकानगरगमनमार्गं च आदिदेश । तत्र पूर्वश्लोके दूरतः दृश्य-मानशेषपर्वतशिखराग्रं वीक्ष्य नमस्कुरु इत्यादिश्य अनेन च आदिशति तं "हे राजहंस! वेङ्कटाद्रिनिलयस्य मधुकैटभहंतुः हरेः स्वच्छवितमनुसृत्य सपर्याविधिं विधेहि । यतस्तत्र स्वाभिमत-साधनार्थं उभये देवाः मनुष्याश्च अवतीर्य आरुह्य च सङ्घीभूय मिलित्वा देवदेवस्य सपर्यां कुर्वन्ति । आनन्दमनुभवन्ति च । उभयेषामपि फलप्राप्तौ वैषम्याभावात् तारतम्यमपि दूरीभवति।

यथा वा सोषलिजसिद्धान्तावलंबिनो राजकीयाः अधिक-धनिनां वैभवस्य परिमितावधिं कल्पयित्वा श्रमजीविनां दरिद्र-राजानां आर्थिकमौन्नत्यं च कल्पयित्वा आर्थिकदशायां सर्वेषां नृणां समानतां उपपादयितुं प्रयतन्तेऽधुनातनकले; इत्थमेव उन्नत-स्थानाधिष्ठितिदुर्वारगर्वदोषं दूरीकृत्य देवान् अधः अवतीर्य स्वयमुन्नतिं प्राप्तुं अशक्नुवानान् दूयमानान् नरान् उन्नतगिरि-शिखराग्रं स्वस्थान मारोप्य मुक्तानुभूतिमिह प्रदाय सत्त्वोन्मेषात्

देवमानुषयोः परस्परतारतम्यगणनामपोह्य समानां दशां आपादयति सर्वेश्वरः इति ।

वस्तुतः स्वर्गंगतान्मनुजादपेक्षया श्रीशैलाधिरूढमनुजस्य वैलक्षण्यमधिकम् । कुतः इति चेत् ?

"यथा पशुरेवं सः देवानां भवति" इति श्रुतिः स्वर्गसुखमभिलष्य यज्ञादिधर्माननुष्ठाय प्राप्तस्वर्गा अपि नराः भूलोके नराणां पशवः इव देवानां भोगोपकरणीभूय तत्परिचर्यां कुर्वन्ति, सुखमनुभवन्ति इत्याह । भूलोके राजसेवया द्रव्यार्जनात् सुरलोके सुरसेवया सुखप्रपणस्य को भेदः ? "ते ये शतं कर्मदेवानां देवानां आनन्दाः स एको देवानां आनन्दः" इत्यानन्दवल्लीषु कर्मदेवानन्दस्य देवानन्दापेक्षया शतांशन्यूनीभावेन तारतम्यमेव स्पष्टीचकार श्रुतिः ।

अतः तत्रकर्मणा देवलोकं आगतान् पुंसः इन्द्रादयो देवा निकर्षेण द्रष्टुं ईशते ।

किन्तु श्रीशैलक्षेत्रमागच्छन्तो देवाः "सेवापराः शिवसुरेशकृशानुधर्मरक्षोंबुनाथपवमानधनादिनाथाः । बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः" इति "प्रणतसुरकिरीटप्रान्तमन्दारमालाविगलितमकरन्दस्यंदिपादारविन्दस्य भगवतः पुरतः शान्तगर्वानलाः भागवतदास्यरसाह्लादशीतनेत्राम्बवः तत्रस्थान् स्थावरजङ्गमात्मकान् जन्तूनपि लब्धश्रीनिवासकृपाकटाक्षभाग्यधन्यजीविनो मन्येरन् खलु ।

किञ्च महता क्लेशेन संपादितं स्वर्गं प्राप्नुवतामपि पुण्यक्षये सति स्वर्गाद्भ्रंशः तथा पुनर्जन्मप्राप्तिः अनिवार्या । यथा हि गीतासु भगवानाह —

"त्रैविद्या मां सोमपाः पूतपापाः,
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते तं भुक्त्वा स्वर्गलोकं विशालं,
क्षीणे पुण्ये मर्त्यलोकं विशन्ति" ॥

इति "आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति च ।

"स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" । इति नीत्या लब्धस्वर्गस्यापि भ्रंशभीरोः क्व चिरनिर्वृतिः भविता । वेङ्कटाद्रौ तु शठकोपसूरिप्रार्थितेव भगवत्पादाऽरविन्दसेवानिरन्तरनिर्वृतिः भवतः सुखेन लभ्यते ।

येन केनचि द्व्याजेन वृषगिरिसविधेषु वसतो अन्तिमकाले भगवत्प्राप्तिरेव स्यात् । न तु स्वर्गतानामिव अवनतस्थितिः । यदाहुः कवितार्किककळभमृगेन्द्राः वेदान्तदेशिकाः दयाशतके —

वृषगिरिसविधेषु व्याजतो वासभाजां,
दुरितकलुषितानां दूयमाना दयेत्वम् ।
करणविलयकाले कान्दिशीकस्मृतीनां,
स्मरयसि बहुलीलं माधवं सावधाना ॥

इति भगवद्भक्तिरहितानपि भगवान् दयया स्वक्षेत्रवासिनः भवताग्रेसरान् संपाद्य अन्ते तेषां स्वविषयिणीं स्मृतिं स्वयमेव संपाद्य स्वसायुज्यं नयति । किमुत भगवत्सेवार्थमेवागच्छतां उन्नतां गतिं ददाति देव इति । देवसेवामुद्दिश्यागच्छन् दैववशात् वृषगिरितटे त्यक्तजीवितोऽपि अर्चिरादिमार्गमवलम्ब्य वैकुण्ठमेव गच्छतीति देवदयायाः महिमा ।

अत एवाहुः "दैवात्प्राप्ते वृषगिरितटं देहिनि त्वक्षिदानात्,
स्वामिन्पाहीत्यवशवचने विन्दति स्वापमन्त्यम् ।
देवः श्रीमान् दिशति करुणे दृष्टिमिच्छंस्त्वदीयां,
उद्धातेन श्रुतिपरिषदामुत्तरेणाऽऽभिमुख्यम् ॥

इति तावत्पर्यन्तं वासोऽपि मुक्तिसुखदायी खलु । यतः "बद्धादरो वृषगिरिप्रणयी यथाऽसौ मुक्ताऽनुभूतिमिह दास्यति मे मुकुन्दः" । तथा भगवद्दयाप्रसादं करिष्यति इत्याचार्याः प्राहुः । अतः "वृषगिरिपुरवासः स्वर्गवासाद्बलीयान्" इति "वेङ्कटेशपुरीस्थाय स्वर्गवासो न रोचते" इति च निर्भीकं सादरं च वक्तुं कुतो न पार्यतेऽस्माभिः" इति ।

## कविहृदयम्

— ना. व. निगमान्तः, प्रोद्दुटूरु.

ग्रीष्मकालः । दिनकरः उग्रैः स्वकरैः सर्वानपि स्थलविशेषान् ऊष्मग्रस्तान् कलयन्नास्ते । सकला अपि पदार्थाः उष्णस्पर्शदूषिताः सम्पद्यन्ते । सर्वेषां मनांसि शैत्यं शरणं गच्छन्ति । अहनि नक्तं वा अन्योन्यसंश्लेषमपि न सहन्ते प्राणिशरीराणि । एतादृशे काले यूनां नवोढानां युवतीनां च दशा कीदृशी स्यात् ? गाढः पारस्परिकोऽनुरागः । वियोगदुःखसहनाक्षमं मनः अति-निर्मले आकाशे प्रकाशमानः आनन्दं अभिवर्धयन् चन्द्रमाः ।

मन्दं मन्दं चलन् मलयमारुतः मधुपानमत्तभ्रमरोत्थापितः मधुरो झङ्काररवः। शरीरसम्पर्के सति स्वेदोष्णस्पर्शाद्यसहिष्णुता। एवंविधे सन्निवेशे युवभिः किं कर्तुं शक्यते? युवजनमानसोद्भवा समस्यामेतां तत्पुरस्थाः - चतुरा युवकाः (युवतयश्च) अनायासेन एवं पर्यहरन् — तदा रात्रौ विरहार्ताः केचन युवानः अन्योन्याभिमुखं उपविशन्तः मनोमोदकैः गूढार्थद्योतकैः शृङ्गारभूयिष्ठैः अन्योन्यवचोभिरेव विना शरीरसम्बन्धं गाढालिङ्गनजं सुखं चान्वभूवन्। केचित्तु विषयपारवश्यात् किमपि वक्तुं अशक्नुवन्तः मुकुलितनयनाः पर्यङ्के सुदूरे शयानाः पूर्वतनं वृत्तं शृङ्गाराचरितं स्मारं स्मारं तज्जन्यं परमानन्दं मनस्येव अविन्दन्। अन्ये तु तन्नगरवासिनः अनुरागतरङ्कितैः स्वकीयैः नेत्रैरेव आतृप्तेः साक्षात् परस्परवीक्षणद्वारा मौनेन तत्तादृशीं मुदं अलभन्त संप्रति। समस्या परिहृता किल? ईदृशसुन्दरभावतुन्दिलं कविमुखाम्भोधेः समुद्धृतं पद्यरत्नमिदमेव —

> "अन्योन्यसङ्गासहने तपर्तावन्योन्यमेवाभिमुखं युवानः।
> वाचापि केचिन्मनसापि केचिद्दृशापि केचिन्दृढमालिलिंगुः"॥

## स्वागतं नलसमाह्वय तुभ्यम्

— के. सि. जयचन्द्रशास्त्री

स्वागतं नलसमाह्वय तुभ्यम्,
प्राप्तवानसि चिरादपि कालात् ।
तावकीनपरिपालनकाले,
लोकमेतु शुभसौख्यसमृद्धीः ।।

नूतनैः किसलयैरपि पुष्पैः,
मण्डिता नु भवदागममोदात् ।
नायिकेव प्रकृतिर्भुवि राजन्,
राजते विदधतीव तवार्चाम् ।।

फुल्लपुष्परसपानविमत्तः,
त्वत्प्रतापमिव गायति भृङ्गः ।
चूतनूतनकिसालयभक्षि,
त्वां समाह्वयति पैकमिदानीम् ।।

वस्त्रभूषणविभूषितगात्राः,
मोदमानहृदया इह मर्त्याः ।
अर्हणाकरणपूर्वकमारात्,
स्वागतन्तु भवते वितनोतुम् ।।

नूतनाम्रशकलैरतिरम्यैः,
निम्बपुष्पनिचयैरपि युक्तम् ।
तिन्त्रिणीफलरसं त्वयि तुभ्यं,
संप्रयच्छति हि संप्रति लोकः ।।

शत्रुभीतिरपगच्छतु, भूयात्
कालवृष्टिरपि सस्यसमृद्धिः ।
इन्दिरारचितविंशतिसूत्रा –
ण्यातनोतु जनताहितमद्धा ।।

# गुरुदक्षिणा

कंदाळ वेंकटरामकृष्णमाचार्यः, तिरुपति

[रघुवंशमाधारीकृत्य संस्कृतपाठशालाच्छात्राणां
अभिनये रुचिवर्धनार्थं रचितं लघुरूपकम्]

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात् परंब्रह्म तस्मै श्रीगुरवे नमः ॥

नान्दी

समुचितपरिचर्योत्फुल्लहृत्पुण्डरीकाः,
स्वतनुजमिव शिष्यं सर्वदा भावयन्तः ।
सततमपि निजान्तेवासिनो वृद्धिकाङ्क्षा –
कलितशुभमनस्काः पान्तु नो गुर्वभिख्याः ॥

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सूत्रधारः – ह्य एवहि रघुमहाराड्भिः सुहुतः विश्वजिद्यागः समाप्तिमगात् । यागसमये च नानादेशसमागतैः द्विजराजबृन्दैः पूरिता समुल्लासिता चेयं नगरी अधुना स्तब्धा निश्शोभेव भाति (परिक्रम्य अवलोक्य च) अहो! मे भावुकः! (प्रविशति पारिपार्श्वकः)

सूत्रधारः – भो! भावुक! अपि कुशलम्?

पारिपार्श्वकः – तथैव दैवानुग्रहेण! भवतु! को वा विशेषः?

सूत्र – रघुमहाराड्भिः समारब्धः विश्वजिद्यागः ह्य एव समाप्तः। प्रातरेव नानादिगन्तागता महीसुराः राजानश्च स्वस्वदेशं प्रतिगताः। यागे अस्मिन् महाराड्भिः सर्वमपि धनधान्य-भूषणादिप्रकरमर्थिभ्यो दत्तमासीत्। अधुना च वर्तन्ते प्रभवः सामान्यैर्वस्त्रैः केवलकिरीटसमूह्यमानराजतावन्तः। यथा राजा तथा प्रजाश्च।

पारि– तर्ह्यधुना याचनार्थं राजसमीपगमनं नोचितमिति मन्ये।

सूत्र – किं भवान् किमपि याचितु मागतः?

पारि– नहि! नाहम्। किन्तु मयाचैको मार्गमध्ये मुनिपुत्रो दृष्टः। सोऽपि मया सहैतद्देशमागतः। सः वरतन्तु-शिष्यः। कौत्स इति तस्य नाम। सः गुरुदक्षिणार्थं राजानं याचितुमागतः। अधुना च राजदर्शनाय राज-द्वारं गच्छति।

सूत्र – तर्हि कष्टमेव भवेत्। नैतावत्पर्यन्तं यः कोऽपि याचकः महाराड्भिः तिरस्कृतः। अद्य तु राजसमीपे धनं नास्ति। कोशं च शून्यम्। किं वा भवेत्? कथं वास्य याचना पूर्णा स्यात्? एतदवश्यं द्रष्टव्यमेव। भावुक! आगच्छ! राजसभामेव गच्छावः। (निष्क्रान्तौ)

इति प्रस्तावना

(रघोरास्थानमण्टपम्। रघुः मन्त्री चोपविष्टौ। पटनिवर्तनम्)

रघुः – (मन्त्रिण मुद्दिश्य) महामात्य! सर्वस्वदक्षिणेनानेन यागेन मम मनः नितरां तृप्तम्। सर्वेऽप्यर्थिनः सन्तुष्टाः। परं जैत्रयात्रायां अनेकेषां बाधोपकल्पितेति मे सन्तापः।

मन्त्री–महाराज! धर्मसंस्थापनार्थाय स्वधर्मः अनुष्ठेयः किल। अतश्च असच्छीलानां दुर्जनानां निर्मूलनमपि धर्म एव। अतो मास्तु तादृशो विचारः। किं चानेन यज्ञेन सर्वस्यापि तस्य परिहारः कृतप्राय एव। यतः पराजिता अपि राजानः सम्यक् सत्कृताः सन्तोषेणैव भवतां प्रभुतामङ्गीकृत्य प्रतिनिवृत्ताः।

प्रती – (प्रविश्य) देव! कौत्सनामा वरतन्तुमुनेः शिष्यः देवदर्शन-सुखमनुभवितुं द्वारि तिष्ठति।

रघुः–त्वरितं प्रवेशय (प्रतीहारी निष्क्रामति) कः कोऽत्र भोः। तान्यर्घ्यपाद्यादिविधये पात्राण्याहर। (एकः पूर्णकुम्भादि पात्राणि तत्र आनयति गच्छति च)

(ततः प्रविशति कौत्सः)

रघुः– महामुने! अभिवादये! स्वागतम्!

कौत्सः-राजन्! विजयीभव!

रघुः– आगम्यताम्! अलङ्क्रियतामिदमासनम्! (कौत्सः उप-विशति) हे कुशाग्रबुद्धे! अपि कुशली मन्त्रकृतां महर्षीणां अग्रणीः वरतन्तुमौनि स्सशिष्यः?

कौत्स -तथैव महाराज! कुशलिन एव देवानुग्रहेण।

रघुः–वासवधैर्यलोपी त्रिविधं तेषां तपः अनन्तरायं सिद्ध्यति किल?

कौत्सः-तथैव महाराज! निर्विघ्नं संपाद्यते।

रघुः—सुतनिर्विशेषं संवर्धितानां आश्रमपादपानां दावानलादिभि-र्बाधा न भवति किल?

कौत्स-गुरूणां तपःप्रभावेन सापि नास्ति।

रघुः—वात्सल्यात् मुनिभि स्सुपरिरक्षिता हरिणकुलप्रसूतिर्निर-पाया वा?

कौत्स-आम्! राजन्! सापि निरुपद्रवैव भगवतः प्रसादेन।

रघुः—नियमाभिषेकादिनिवर्तकानि तीर्थजलानि शिवानि किल?

कौत्सः-तान्यपि शिवान्येव।

रघुः—अतिथीनां भवतां च शरीरधारणोपायं धान्यं गोमहिष्या-दिकं न भक्षयति किल?

कौत्सः-महाराज! सर्वं कुशलम्। किमनेन प्रश्नोत्तरायासबहुलेन राजन्! श्रूयतामिदम्।

सर्वत्र नो वार्तमवेहि राजन् नाथे कुतस्त्वय्यशुभं प्रजानाम्।
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा॥

रघुः—भवतु। भो मुनिवर! किं त्वं प्रसन्नेन महर्षिणा गृहं गन्तुं अनुमतः यतस्त्वं सर्वोत्तमं गृहस्थाश्रमं स्वीचिकीर्षुरिव दृश्यसे।

कौत्सः-तथैव महाराज! गुरवश्चैतावत्कालं मामध्याप्य गृहं गन्तुमनुमतिं दत्तवन्तः।

रघुः—हे पूजनीय! तवार्हतोऽभ्यागमनेन केवलं न मम मनस्तृप्तम्। अतो ज्ञातुमिच्छामि किं भवान् गुर्वर्थं अथवा स्वकार्यार्थं आगत इति?

[ अनुवर्तते ]

**काञ्चीकामाक्ष्याः कुम्भाभिषेकमहोत्सवः —**

श्रीमतां काञ्चीकामकोटिपीठाधिपानामाध्यक्ष्येण काञ्चीकामाक्ष्याः कुम्भाभिषेकमहोत्सवः चैत्रशुक्लप्रतिपदारभ्य, पञ्चमीपर्यन्तं (१-४-७६ — ५-४-७६) महता विभवेन प्राचलत्। तदङ्गतया वेदपारायणं, पुराणपठनं, जपहोमादीनाञ्जकरणं यथाविधि समभूत्। नानाविधानि जनाकर्षकाणि विनोदकार्यक्रमाण्यप्यासन्। पुराणेतिहासकथासूचकानां, पुण्यक्षेत्राणां, देवानां, महात्मनां च चित्रपटानि च प्रदर्शितानि, येषां दर्शनेन जनानां पुराणादिषु रक्तिः, देवेषु भक्तिः, स्वेषु आध्यात्मिकासक्तिः पापाचरणे विरक्तिः भवबन्धात् विमुक्तिश्च विवर्धेत। महोत्सवसमये अन्नदानं पारं नागमत्। घनपाठिनः, पण्डिताः, कवयश्च यथार्हं सत्कृताः। एतादृशपुण्यकार्यकारणेभ्यः, कामकोटिस्वामिचरणेभ्यो सप्रश्रयं नमः कुर्मः।

* * *

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम् मन्त्रालयः —**

अस्य पीठस्य वार्षिकपरीक्षाः मन्त्रालये तच्छाखासु च रायचूरु, बेङ्गळूरु, मैसूरु, मद्रासु इत्यादिषु १३-४-७६ तिथितः आरभ्य ३०-४-७६ पर्यन्तं प्रचलिष्यन्तीति तत्पीठस्य अध्यक्षः श्री सुज्ञानेन्द्राचार्यः विज्ञापयति।

* * *

आवेदकानां कृते —

सं. भा. प्र. सभया प्रचाल्यमानासु परीक्षासु समर्थकोविद-परीक्षे अधोनिर्दिष्टकेन्द्रेष्वेव प्रचलेताम्, यद्यपि इतरा अपि परीक्षाः तत्र प्रचलेयुः। इतरेषु केन्द्रेषु सर्वत्र परिचय, अभिज्ञ, विचक्षणपरीक्षा एव प्रचलेयुः। आवेदकाः यथेष्टं अन्यतमं केन्द्रं स्वीकुर्वन्तु — १. अनन्तपुरम्, २. अनकापल्ली, ३. कडप, ४. कुम्भकोणम्, ५. कोयम्बत्तूर्, ६. क्रोंपेट, ७. गुण्टूरु, ८. गूडूरु, ९. तञ्जावूरु, १०. वेल्लूरु, ११. तिरुपति, १२. भीमवरम् १३, मधुरा १४. मछिलीपट्नम्, १५. मन्त्रालयः, १६. विजय-वाडा, १७. रायचूरु, १८. चित्तूरु, १९. कन्दुकूरु, २०. हैदराबाद्, २१. सेलम्, २२. विशाखपट्टणम्, २३. श्रीकाकुलम्, २४. काकिनाडा, २५. पिठापुरम्, २६. विजयनगरम्।

* * *

सं. भा. प्र. सभायै घटीयन्त्रप्रदानम् —

संस्कृतभाषाप्रचारिण्याः सभायाः कार्यदर्शी श्रीयुतः ना. रामनाथार्यः, (न्यायवादी, चित्तूरु) दिवंगतस्य स्वस्य पितृव्यस्य कौ. शे. चन्द्रशेखरार्यस्य, दिवंगतायाः स्वपितृव्यस्य धर्म-पत्न्याः श्रीमत्याः सीतालक्ष्म्याश्च स्मृतिचिह्नतया, अतिसुन्दरं पृथुलं कुड्यघटीयन्त्रं (Wall clock) प्रदत्तवान्।

कालमानसूचकोऽयं सभाकार्यालयस्य नितरामुपयोगाय कल्पते। तस्य रामनाथार्यस्य दातृतां बहुधा श्लाघमानाः कार्यवर्गश्च्याः एतत्प्रकटनद्वारा कृतज्ञतां प्रकटीकुर्वन्ति।

तस्य रामनाथार्यस्य सकुटुम्बस्य श्रीनिवासः निरन्तरसुख-सम्पदं दद्यादिति आशास्महे।

* * *

# हा धिक् महात्मन्

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

आंग्लानां कटुशासनं शमयितुं "सत्याग्रहा"ख्यस्त्वया,
लोकानां कुतुकङ्करः प्रथमतः सृष्टो महाध्वा पुरा ।
स्वातंत्र्यं समुपागतं च जनता सम्मोदिता भारते,
गान्धिन्! साह्यधुना त्वसत्यपथिका हाधिक् महात्मन् पितः॥

राष्ट्रस्यास्य दरिद्रलोकनिवहः भूत्वा मुहुर्मद्यपः,
नानार्ति वहतीति दुःखितमवाः तत्स्तम्भने चाग्रही ।
भूत्वा त्वं किल मद्यपानसरणिं चाऽखण्डयः किं त्वहो,
दृश्यन्तेऽद्य च खेटके च नगरे गंजा महात्मन् पितः ॥ २

अन्यायप्रतिरोधने च भवतः शस्त्रं त्वहिंसात्मकं,
यस्याग्रे तु महास्त्रसंततिरपि स्थातुं प्रभुर्नाभवत् ।
दूरे सा समभूत् गृहीतमधुना हिंसात्मकोऽध्वा जनैः,
नित्यं साधयितुं मनोगतमहो हा धिक् महात्मन्पितः! ॥ ३

राष्ट्रस्यास्य नचैकता, जनहितां वाणीं विनेत्यादरात्,
"हिन्दी राष्ट्रगिरे"ति घोषितवती राष्ट्रे त्वया भारते ।
भाषा सा बहुधा विरोधपदवीं प्राप्ता मुहुर्द्वेषतः,
गान्धिन्नद्य जनैकता न च पुनर्दृष्टा महात्मन्! धिक् ॥ ४

राष्ट्रे चात्र जना वसंति बहवो दीनाश्च हीना धनैः,
देहाच्छादनवस्त्रमेकमपि तद्भाग्ये न चास्तीत्यहो ।
चिन्तामुद्रितचेतसा ननु भवान् एकं दधारांशुकं,
कौशेयाकलितञ्च नायकवपुः सद्यो महात्मन् अहो! ॥ ५

सायंकालगतां सभां जिगमिषुस्त्वं प्रार्थनार्थं पुरा,
नीचेनास्त्रहतोऽपि मृत्युसमये हा राम सम्बोधनम् ।
कृत्वेष्टं स्मृतवान्कृपोदधिमहो देवं जना अद्य तु,
रामं तं ननु विस्मरन्ति सततं हाधिक् महात्मन् पितः ॥ ६

धेनूनां किल दोहनस्य समये दुष्टैः कृतं हिंसनं,
दृष्ट्वा दुःखभरो भवांस्तु सहसा दुग्धस्य पानं जहौ ।
हिंस्यन्ते ननु धेनवोऽद्य बहुधा कोऽप्यत्र दृष्टिं पुनः,
राष्ट्रेऽस्मिन्न ददाति तां प्रति निजां हाधिक् महात्मन् पितः॥

त्रातुं सज्जनतां च दुष्कृतिकृतां अन्त्यं विधातुं तथा,
देवः संभवतीति विश्ववलये विश्वस्तलोकं पुनः ।
सम्यक् तोषयितुं जनिर्भवतु ते गान्धिन् महात्मन् पितः,
देशेऽस्मिन् किल भारते सुरगणैः जन्मार्थमाशासिते ॥ ८

# श्रीरामानुजाचार्यः

"अमरः"

[पूर्वानुबन्धः]

कुलो– किं मदीयं ज्ञानं प्राथमिक मिति ब्रवीषि? तवाऽहंकारः प्रवृद्धः किम्?

कूरे – अधिकार एवाऽहंकारं वर्धयति। त्वं सर्वाधिकारसमन्वितोऽसि। अत स्तवैवाऽहंकारः प्रवृद्धः स्यात्। सर्वसङ्गपरित्यागिना मस्माक महङ्कारः लेशतोऽपि न भविष्यति। (इति सहेलन महसत्)

कुलो– कथं निर्भयं भाषसे? (इति रोषताम्रेक्षणोऽभवत्)

कूरे – मृत्युभीतानां भवादृशानां भीतिर्भवति; अतथाभूताना- मस्माकं भयं कुतो भविष्यति? अकुतोभया वयम् —

(तच्छ्रुत्वा कुलोत्तुंगस्य किं भाषणीयं कथं वेत्येतत् नाऽस्फुरत्। रोषारुणेक्षणस्य ओष्ठादिकमङ्गजातमेवाऽस्फुरत्।)

कूरेशः कुलोत्तुङ्गं सम्बोध्य एव माह — "कुलोत्तुङ्गसार्वभौम! भ्रान्तोऽसि; आत्मानं शैवं मन्यसे। परन्तु परमार्थतः शैवमतं वा अद्वैततत्वं वा न जानीषे। यदि त्वं ज्ञानी अभविष्यः तर्हि एवं वैष्णवान् भयभ्रान्तान् नाऽकरिष्यः। अद्वैतमतप्रवर्तकः शङ्करः बलप्रयोगेण निजतत्त्वं न स्थापयामास। बौद्धजैनमतेषु विद्यमानान् लोपान् प्रदर्श्य तन्मतपण्डितै स्सह वादं कृत्वा तान् निजसिद्धान्त मङ्गीकारयामास। बुद्धिबलेन स तथाकरोत्; न तु खड्गबलेन यथा त्वम्। त्वादृशा राजानः कति नाऽसन्?

कति गताः कालगर्भं? तेषां नामाऽपि न श्रूयते इदानीम्। अतस्त्वं हिंसाविधानं परित्यज्य स्वमतं विश्वासमार्गेण प्रवर्तय। तव मते येषां विश्वासो जायते तेऽवश्यं त्वन्मतं स्वीकुर्युः। निर्बन्धेन कोऽपि मतनिष्ठां प्राप्तुं न शक्नोति। अद्य अस्यां सभायां समुपविष्टानां हृदये वैष्णवं विशिष्टाद्वैततत्वं च कतीनां परिनिष्ठितमिति त्वं न जानीषे; यद्यप्येते विभूतिरेखाभिः तिर्यक्पुण्ड्रं धरन्ति त्वदीयनिर्बन्धशासनेन। अन्ततो गत्वा किं त्वमेव वा अद्वैती भवितु मर्हसि? आलोच्यतम्। अतः वैष्णवान् कुतो बाधसे? हिंसा सर्वथा त्याज्यैव ते आत्मानं शैवं मन्यमानस्य" इति।

सभासद स्सर्वेऽपि तस्य भाषणं श्रुत्वा निर्भयतां प्रशंसन्तः परस्परं जजल्पुः। सर्वेऽपि ते कूरेशं रामानुज मेव सम्भावयन्ति। एवं निर्भयप्रवृत्तेरेव रामानुजः सर्वान् प्रज्ञानिधीन् वादे जयन्नास्ते इत्यमन्यन्त।

"नाऽहं ते प्रबोधामृतं श्रोत्रपेयं कर्तुं निमन्त्रणमकरवम्। अस्मिन् राज-पत्रे हस्ताक्षराणि कर्तुमेव त्व मानीतोऽसि" इत्युक्त्वा कुलोत्तुङ्गः "शिवात्परतरं नाऽस्ति" इति मकुटालंकृते राजपत्रे तस्य हस्ताक्षराणि ग्रहीतुं भटानादिशत्। कश्चिद्भटः पत्रं लेखिनीं च कूरेशस्य हस्ते दत्वा हस्ताक्षराणि कर्तुमवोचत्। कूरेशः समन्दहासं पत्रं हस्ते गृहीत्वा तत्रत्यं "शिवात्परतरं नाऽस्ति" इत्येतत् उच्चैः पपाठ। "सत्वरं तत्र हस्ताक्षरं कुरु" इति कुलोत्तुङ्गः समादिशत्। कूरेशः लेखिनीं आदाय सस्मितं तत्र पत्रे किमपि किमपि लिलेख।

सर्वे सभासदः "एतावत्पर्यन्तं प्रतिकूलभाषी रामानुजः किमिति निश्शब्दं तत्र पत्रे हस्ताक्षरं कर्तुं प्रववृते" इति साश्चर्यं

परस्परं प्रष्टुमारेभिरे। राजाऽप्याश्चर्यान्वित एव तस्य तथा प्रवृत्तेः।

राजभटः तत्पत्रं कूरेशस्य हस्तात् गृहीत्वा राज्ञः सकाशं गतः। राजा मन्त्रिणे देहीत्याह। मन्त्री त्रिपुरान्तकः तत्पत्रे रामानुजस्य हस्ताक्षरं नाऽपश्यत्; प्रत्युत एवं लिखित मासीत्—

"द्रोण मस्ति ततः परम्" कुलोत्तुङ्गः मन्त्रिणं प्रपच्छ "किं रामानुजः हस्ताक्षर मकरोन्न वा?" इति। मन्त्री नैवेत्याह। सर्वे मन्त्रिण मेव द्रष्टु मारेभिरे। कूरेशः राजानं दृष्ट्वा मन्दहास मकरोत्। स हासः असिरेवाऽसीद्राज्ञः, तस्य हृदयं विद्धश्च। "किं लिखितं तेन पत्रे" इति सोद्वेगं मन्त्रिण मपृच्छद्राजा।

मन्त्री उच्चैः पपाठ "द्रोणमस्ति ततः परम्" को नाम तस्यार्थः? कूरेशः शिवशब्दं परिमाणवाचकं गृहीत्वा ततोऽपि परतरं परिमाणं द्रोणनामक मस्ति किलेति व्यंग्यधोरणीं स्फोरयन् तथा लिलेख। शिवात्परतरः विष्णुरेवेत्यत्र न कोऽपि संशयो मम इति सूच्यार्थसूचनमपि कृतं तेन। एवं तस्य तिरस्कारभावं विज्ञाय कुलोत्तुङ्गः क्रोधाविष्टस्सन् कूरेशस्य नेत्रद्वय मुत्पाटयितुं भटानाज्ञापयत्। तदा कूरेशः कुलोत्तुंग माह—"महापापिनं त्वां दृष्टवद्भ्यां नेत्राभ्यां अतिपवित्रचरित्रं मम गुरुं भगवद्रामानुजं द्रष्टुं नाऽर्हामि। अतः स्वयमेवाऽहं नेत्रद्वय मुत्पाटयामि यावत्" इति। एवं वदन्नेव कूरेशः नेत्रयुगल मुत्पाट्य कुलोत्तुंगं लक्ष्यीकृत्य प्राक्षिपत्। नेत्रभागाभ्यां रुधिरधारा प्रवहति स्म। तत् बीभत्सदृश्यं विलोक्य सर्वे निश्चेष्टा बभूवुः। कुलोत्तुंगोऽपि

क्षणमात्रं स्तब्धोऽभवत् । तत स्सोद्वेगं स कूरेश मपृच्छत् — किं त्वं रामानुजो नाऽसि? इति ।

कूरे – नाऽस्मि ।

कुलो– तर्हि कस्त्वम्?

कूरे – तस्य शिष्यपरमाणुः कूरेशनामाऽह मस्मि ।

अहो! कियत् प्रतारणं! वञ्चितोऽस्मि! रामानुजः नैव बद्धः उन्मुक्त आसीत्" इति उच्चै राक्रोशन् कुलोत्तुंगः वृद्धस्य महापूर्णस्य नेत्रद्वयमपि उत्पाटयताम्िति भटानाज्ञापयत् । द्वाव-पीमा वितो विष्कास्य रामानुजं यत्र क्वाऽपि निलीय स्थितं निगडबद्धं विधाय आनयतेत्यादिशत् । कुलोत्तुंगः नवं परिभवं आत्मनः कृत ममन्यत ।

१५. वैष्णवद्वयम् —

कुलोत्तुंगस्य क्रौर्येण कूरेशमहापूर्णयोः नेत्रहानिर्जाता। सभासदां सर्वेषा मपि मनांसि व्याकुलान्यासन् । काञ्चीपुरे सर्वत्र तामेव घटनामधिकृत्य सर्वे जना संलपन्त आसन्। रामानुज-शिष्याः अतीव श्रेष्ठा धीराश्चेति प्राणानपि तृणाय मन्यन्त इति तै स्सह वादं न कोऽपि कर्तुं शक्नोतीति, अन्ततो गत्वा क्रूरं सार्वभौम मपि कुशाय काशाय वा मन्यन्त इति प्रशशंसुः । त्रिपुरान्तकं मन्त्रिणं राजानं कुलोत्तुङ्गचोलं चाबिन्दन् ।

[क्रमशः]

सुकविता यद्यस्ति राज्येन किम् ?

# कविताविनोदः—

(६) समस्या ।

"अताता अनपत्याश्च मिथो विप्रेण वै हताः"

उत्सुकै रेतां समस्यां सचमत्कारं पूरयित्वा एतन्मासान्तात् पूर्वमेव अधोविद्यमानचीटिकायां स्वसङ्केतादि यथासूचितं सविरळं विलिख्य, साकं प्रेषणीया । प्रेषितेषु रुचिरतया विद्यमानाः श्लोकाः आगामिन्यां गैर्वाण्यां प्रकटीकरिष्यन्ते ।

---

**कविताविनोदाय**

नाम –

सङ्केतः –

नगरं / ग्रामः

पत्रालयः –

मण्डलम् –

प्रान्तः –

---

सम्पादकः, "गैर्वाणी" संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ. प्र.) इति सङ्केताय प्रेषयन्तु ।

Please mention your membership Number for
easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65.

Licensed to Post without Prepayment. LICENCE No.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५–००

---

## प्रहेलिका

इन्दीवराक्ष्याः स्फुरविद्रुमोष्ठ्याः,
सङ्केतमुद्दिश्य वने चरन्त्याः ।
चोरैः समस्ताभरणानि हृत्वा,
नासामणिर्नोपहृतः किमेतत् ? ॥

उपरि अक्ष्णोः नीलच्छायं, अधस्तात् ओष्ठस्य रक्तवर्णच्छाया, तयोः प्रतिबिम्बितं नासामौक्तिकं गुञ्जाफलमिति चोरैर्न-हृतम् ।

Published by Sri N. Ramanatha Aiyer B. A;B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor (A. P.) C. 1500.